॥ श्रीगणेशाय नमः ॥

# वैयाकरणभूषणसारः ।

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्व्वं जगदेतद्विवर्त्तते ॥ १ ॥
अशेषफलदातारं भवाब्धितरणे तरिम् ।
शेषाशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ॥ २ ॥
पाणिन्यादिमुनीन् प्रणम्य पितरं रंगोजिभट्टाभिधम्
द्वैतध्वान्तनिवारणादिफलिकां पुंभाववाग्देवताम् ॥
ढुण्ढि गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान् ।
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये ॥ ३ ॥

प्रारिप्सितप्रतिबन्धकव्यूहोपशमनाय कृतं श्रीपतञ्जलिस्मरणरूपं मंगलंशिष्यशिक्षार्थं निबध्नन् चिकीर्षितं प्रतिजानीते ।

**फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः ।**
**तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते ॥ १ ॥**

उद्धृतइत्यत्र अस्माभिरिति शेषः । भाष्याब्धेः शब्दकौस्तुभउद्धृत इत्युक्तिस्तु शब्दकौस्तुभोक्तानामर्थानामाधुनिकोत्प्रेक्षितत्वनिरासाय । अन्यथा तन्मूलकस्यास्य ग्रन्थस्याप्याधुनिकोत्प्रेक्षितासारत्वापत्तौ पाणिनीयानामनुपादेयतापत्तेः । तत्र निर्णीतइत्यु-

क्तिरितोऽप्यधिकं जिज्ञासुभिः शब्दकौस्तुभे द्रष्टव्यमिति ध्वनयितुम् ॥ १ ॥

प्रतिज्ञातमाह ।

**फलव्यापारयो र्धातुराश्रये तु तिङः स्मृताः ।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥२॥**

धातुरित्यत्र स्मृतइति बचनविपरिणामेनान्वयः । फलं विक्लित्यादि, व्यापारस्तु भावनाभिधा साध्यत्वेनाभिधीयमाना क्रिया । उक्तञ्च वाक्यपदीये ।

यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते ।
आश्रितक्रमरूपत्वात् * सा क्रियेत्यभिधीयते इति ॥

न च साध्यत्वेनाभिधानेमानाभावः, पचति, पाकः, करोति, कृतिरित्यादौ धात्वर्थावगमाविशेषेऽपि क्रियान्तराकाङ्क्षानाकाङ्क्षयोर्दर्शनस्यैव मानत्वात् । तथा च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपं साध्यत्वम् तद्रूपवत्त्वमसत्वभूतत्वम् एतदेवादाय ।

असत्वभूतोभावश्च तिङ्पदैरभिधीयते ।

इति वाक्यपदीयमिति द्रष्टव्यम् । अयञ्च व्यापारः फूत्कारत्वाधःसन्तापनत्वयत्नत्वादि-तत्तद्रूपेणवाच्यः । पचतीत्यादौ तत्तत्प्रकारकबोधस्यानुभवसिद्धत्वात् । नच नानार्थतापात्तिः, तदा-

---

* आश्रितं क्रमरूपं यस्यास्तत्वात् पूर्वापरीभूताऽवयवकत्वादित्यर्थः । तदीयाऽवयवानामधिश्रयणाद्यधःश्रयणपर्यन्तानां क्रमेणोत्पत्तेः क्रियापदेन सोच्यते यत्र च नक्रमिकावयवको व्यापारस्तत्र रूढिरेवाऽऽदरणीया पौर्वापर्यारोपो वा फलस्यापि स्वजनकव्यापारगतपौर्वापर्यारोपेण तथैव भानमत एव तन्मात्रवाचकस्य धातुत्वसिद्धिरिति भावः

दिन्यायेन बुद्धिविशेषादेः शक्यतावच्छेदकानामनुगमकस्य सत्त्वात् । आख्याते क्रियैकत्वव्यवस्थापि अवच्छेदकबुद्धिविशेषैक्यमादायैव । उक्तञ्च वाक्यपदीये ।

गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ।

बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यतइति ॥

धात्वर्थंनिरूप्य तिङर्थमाह ( आश्रयेत्विति ) फलाश्रये व्यापाराश्रयेचेत्यर्थः । फलाश्रयः कर्म्म, व्यापाराश्रयः कर्त्ता । तत्र फलव्यापारयोर्धातुलभ्यत्वान्न तिङस्तदंशे शक्तिरन्यलभ्यत्वात् । शक्यतावच्छेदकं चाश्रयत्वं तत्तच्छक्तिविशेषरूपमिति सुबर्थनिर्णये वक्ष्यते । नन्वनयोराख्यातार्थत्वे किं मानम् प्रतीते* र्लक्षणया, आक्षेपात्† प्रथमान्तपदाद्‡ वासम्भवादिति चेत् अत्रोच्यते ।

"लः कर्म्मणि च भावे चाकर्म्मकेभ्य" इति ।

सूत्रमेव मानम् । अत्र हि चकारात् "कर्त्तरि कृदिति" सूत्रोक्तं कर्त्तरीत्यनुकृष्यते बोधकतारूपां तिबादिशक्तिं तत्स्थानित्वेन कल्पिते लकारे प्रकल्प्य लकाराः कर्म्मणि कर्त्तरि चानेन

---

* "यद्यद्बोधकन्तत्तदर्थकमिति" नियमादाख्यातकर्तृकर्मप्रतीतिरेव मानमिति भावः ।

† आक्षेपोनुपपत्तिस्ततत इत्यर्थः । तथाहि अन्विताऽभिधानवादिमते पदानां विशेषणत्वेनैवाऽर्थोपस्थापकतयाऽऽख्यातार्थभावनाया विशेषणता ऽनुपपत्या तस्याश्रयाक्षेपकत्वमिति ।

‡ ननु व्याप्त्यादिप्रतिसंधानं विनाप्याश्रयबोधस्यानुभवसिद्धत्वान्नाक्षेपादाश्रयभानोपपत्तिः काचित्कत्वात्तथाभानस्येत्यत आह । प्रथमान्तपदाद्वेति समभिव्याहृतप्रथमान्तचैत्रादिपदादेवाश्रयप्रतीत्युपपत्तेरित्यर्थः । एवञ्च नाश्रयप्रतीत्यनुपपत्तिः आश्रये आख्यातशक्तिसाधिकेति भावः

विधीयन्ते नकारविसर्गादिनिष्ठां कर्म्मकरणादिबोधकशक्तिमादाय शसादिविधानवत् । नच सूत्रे कर्तृकर्म्मपदे कर्तृत्वकर्म्मत्वपरे तथा च कर्तृत्वं कृतिः, कर्म्मत्वञ्च फलमेवार्थोऽस्त्विति शंक्यम्, फलव्यापारयोर्धातुलभ्यत्वेन लकारस्य पुनस्तत्र शक्तिकल्पनाऽयोगात् । अथ दर्शनान्तरीयरीत्या व्यापारस्य धात्वर्थत्वाभावात्तत्र लकारविधिः स्यादिति चेत्तर्हि कृतामपि कर्तृकर्म्मादिवाचित्वं न सिध्येत् "कर्त्तरि कृदिति" च, "लः कर्म्मणि" त्यनेन तुल्ययोगक्षेमम् * । अपि च मीमांसकानां कृतामिवाख्यातानामपि कर्तृवाचित्वमस्तु भावनायाएवाक्षेपेण कृदादिवत्प्रतीतिसम्भवे † वाच्यत्वं मास्तु । तथा सति प्राधान्यं तस्या न स्यादिति चेन्न घटमानयेत्यादावाक्षिप्तव्यक्तेरपि ‡ प्राधान्यवदुपपत्तेः । पचतीत्यादौ पाकं करोतीति भावनाया विवरणदर्शनाद्वाच्यत्वमिति चेत् पाकानुकूलव्यापारवतः कर्त्तुरपि विवरणविषयत्वाविशेषात् । न च कर्त्तुर्विवरणं तात्पर्य्यार्थविवरणं पाकं करोतीत्यशब्दार्थकर्म्मत्वविवर-

---

* अलब्धलाभो योगो लब्धरक्षणं क्षेममेवञ्च लःकर्मणीत्यस्यानन्यलब्धभावनाया आख्यातार्थप्रतिपादकत्वोपगमे न्यायसाम्यात्कर्तरिकृदित्यस्यापि कृतां भावनार्थत्वप्रतिपादकत्वन्तस्याऽऽक्षेपादेव लाभान्न कृतां तच्छक्तिप्रतिपादकं तदिति यदि तर्त्तर्हि लःकर्मणीत्यपि नाख्यातस्य भावनाशक्तिप्रतिपादकमिति समानमित्यर्थः ।

† तत्र तस्येति वतिः कृदादिस्थल इवेत्यर्थः । तथाच यथा भवन्मते धातोर्व्यापाराऽवाचकत्वेन कृदर्थकर्त्राक्षिप्तभावनाया बोधविषयत्वं तथाऽऽख्यातस्यापि व्यापाराऽवाचकत्वेन आख्यातार्थकर्त्राक्षिप्तभावनाया बोधविषयत्वं भविष्यतीति भावः ।

‡ जातिः पदार्थ इति मते जात्याक्षिप्तव्यक्तेर्यथा प्राधान्यं तथा कर्त्राऽऽक्षिप्तभावनाया अपि प्राधान्यमुपपत्स्यत इत्यर्थः ।

णवत् इतरेतरद्वन्द्वे समुच्चयांशविवरणवद्वा न तदर्थनिर्णायकमिति वाच्यम् । भावनायामपि तुल्यत्वात् । किञ्च पचतिदेवदत्त इत्यत्रा-भेदान्वयदर्शनात् तदनुरोधेन कर्त्तुर्वाच्यत्वमावश्यकम् पक्ता देव-दत्तइतिवत् । न चाभेदबोधे समानविभक्तिकत्वं नियामकम् तच्च तत्र नास्तीति वाच्यम् सोमेन यजेत, स्तोकं पचति, राजपुरुषइ-त्यादावप्यभेदबोधानापत्तेः । नच लक्षणया कर्त्तुरुक्तत्वात् सामा-नाधिकरण्यं पिङ्गाक्ष्यादियौगिकानामपि द्रव्यवाचित्वानापत्तेः । एवं वैश्वदेवीत्यादितद्धितानामपि "अनेकमन्यपदार्थे" "सास्यदे-वते" त्यनुशासनेन पिंगे अक्षिणी यस्याः, विश्वे देवा देवताअस्या इति विग्रहदर्शनात्प्रधानषष्ठ्यर्थे एव अनुशासनलाभात् । तथा च "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति" वाक्ये द्रव्यानु-क्तेरारुण्यस्य स्ववाक्योपात्तद्रव्य एवान्वयप्रतिपादकारुणाधिकर-णोच्छेदापत्तिः । द्रव्यवाचकत्वसाधकमूलयुक्तेः सामानाधिकरण्य-स्योक्तरीत्योपपत्तेरिति प्रपञ्चितं विस्तरेण बृहद्वैयाकरणभूषणे । (तिङः) इति बोधकतारूपा शक्तिस्तिङ्क्ष्वेवेत्यभिप्रेत्येदम् । पदार्थं निरूप्य वाक्यार्थं निरूपयति (फले) इत्यादि । विक्लित्यादि फलं प्रति (तिङर्थः) कर्तृकर्म्मसंख्याकालाः । तत्र कर्तृकर्म्मणी फलव्या-पारयोर्व्विशेषणे, संख्या कर्तृप्रत्यये कर्त्तरि, कर्म्मप्रत्यये कर्म्मणि, समानप्रत्ययोपात्तत्वात् । तथाचाख्यातार्थसंख्याप्रकारकबोधं प्रत्या-ख्यातजन्यकर्तृकर्म्मोपस्थितिर्हेतुरिति कार्य्यकारणभावः फलितः । नैयायिकादीनामाख्यातार्थसंख्यायाः प्रथमान्तार्थे एवान्वयादा-ख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावो वाच्यः सोपि चन्द्रइव मुखं दृश्यते, देवदत्तोमु-

क्त्वा व्रजतीत्यादौ चन्द्रक्त्वार्थयोः आख्यातार्थानन्वयादितरा-
विशेषणत्वघटित इत्यतिगौरवम्। इदमपि कर्तृकर्म्मणोराख्यातार्थत्वे
मानमिति स्पष्टं भूषणे, कालस्तु व्यापारे विशेषणम् तथा हि "व-
र्त्तमाने लट्" इत्यत्राधिकाराद्धातोरिति लब्धम् तच्च धात्वर्थं वदत्प्रा-
धान्याद्व्यापारमेव ग्राहयतीति तत्रैव तदन्वयः नच संख्यावत्कर्तृ-
कर्म्मणोरेवान्वयः शंक्यः, अतीतभावनाके कर्त्तरि पचतीत्यापत्तेः
अपाक्षीदित्यनापत्तेश्च पाकानारम्भदशायां कर्तृसत्त्वे पक्ष्यतीत्यना-
पत्तेश्च, नापि फले तदन्वयः फलानुत्पत्तिदशायां व्यापारसत्त्वे
पचतीत्यनापत्तेः पक्ष्यतीत्यापत्तेश्चेत्यवधेयम् न चामवातजड़ी-
कृतकलेवरस्योत्थानानुकूलयत्नसत्त्वादुत्तिष्ठतीति प्रयोगापत्तिः,
परयत्नस्याज्ञानादप्रयोगात् किञ्चिच्चेष्टादिनावगतौ चायमुत्तिष्ठति
शक्त्यभावात् फलन्तु न जायतइति लोकप्रतीतेरिष्टत्वात्, एवञ्च
तिङर्थो विशेषणमेव भावनैवप्रधानम्, यद्यपि प्रकृतिप्रत्ययार्थयोः
प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टं, तथापि "भावप्रधानमाख्यातं
सत्वप्रधानानि नामानीति" निरुक्ताद्भूवादिसूत्रादिस्थक्रियाप्राधा-
न्यबोधकभाष्याच्च धात्वर्थभावनाप्राधान्यमध्यवसीयते अपि च
आख्यातार्थप्राधान्ये तस्य देवदत्तादिभिः सममभेदान्वयात्प्रथमा-
न्तस्य प्राधान्यापत्तिः तथा च पश्य मृगोधावतीत्यत्र भाष्यसि-
द्धैकवाक्यता न स्यात् प्रथमान्तमृगस्य धावनाक्रियाविशेष्यस्य
दृशिक्रियायां कर्म्मत्वापत्तौ द्वितीयापत्तेः, न चैवम् प्रथमासामाना-
धिकरण्यात् शतृ प्रसंगः, एवमपि द्वितीयायादुर्व्वारत्वेन पश्य मृग-
इत्यादिवाक्यस्यैवासम्भवापत्तेः, नच पश्येत्यत्र तामिति कर्म्माध्या-
हार्य्यम् वाक्यभेदप्रसंगात् उत्कटधावनक्रियाविशेषस्यैव दर्शनक-

र्मतयान्वयस्य प्रतिपिपादयिषितत्वात् अध्याहारे अनन्वयापत्तेश्च एवञ्च भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तं नादरणीयम् । किन्तु आख्यातार्थकर्तृप्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमिति कार्य्यकारणभावोद्रष्टव्यः। भावनाप्रकारकबोधं प्रति तु कृज्जन्योपस्थितिवत् धात्वर्थभावनोपस्थितिरपि हेतुः पश्य मृगोधावति, पचति भवतीत्याद्यनुरोधादिति दिक्। इत्थञ्च पचतीत्यत्रैकाश्रयिका पाकानुकूला भावना, पच्यते इत्यत्रैकाश्रयिका या विक्लित्तिस्तदनुकूला भावनेति बोधः। देवदत्तादिपदप्रयोगे त्वाख्यातार्थकर्त्रादिभिस्तदर्थस्याभेदान्वयः। घटो नश्यतीत्यत्रापि घटाभिन्नाश्रयकोनाशानुकूलोव्यापारइति बोधः सच व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम् । अतएव तस्यां सत्यां नश्यति, तदत्यये नष्टः, तद्भावित्वे नङ्क्ष्यतीति प्रयोगः। देवदत्तोजानातीच्छतीत्यादौ च देवदत्ताभिन्नाश्रयको ज्ञानेच्छाद्यनुकूलो वर्त्तमानो व्यापारइति बोधः सचान्तत आश्रयतैवेति रीत्योह्यम् ॥ २ ॥

नन्वाख्यातस्य कर्तृकर्मशक्तत्वे पचतीत्यत्रोभयबोधापत्तिः कर्तृमात्रबोधवत् कर्ममात्रस्याऽपि बोधापत्तिरित्यतस्तात्पर्यग्राहकमाह।

**फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः॥**
**व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयाऽन्वयम्**

तङादयः फले आश्रयाऽन्वयं द्योतयन्ति फलान्वय्याश्रयस्य कर्मत्वात् तद्द्योतकाः कर्मद्योतकाः व्यपाराऽन्वय्याश्रयस्य

कर्तृत्वात्तद्द्योतकाः कर्तृद्योतका इतिसमुदायार्थः (द्योतयन्ति) तात्पर्य्यं ग्राहयन्ति ॥ ३ ॥

नन्वेवं "क्रमादमुं नारद इत्यबोधि स इत्यादौ पच्यते ओदनः स्वयमेवेत्यादौ च व्यभिचारः। कर्मणः कर्तृत्वविवक्षायां कर्त्तरि लकारे सति "कर्मवत् कर्म्मणातुल्यक्रिय" इत्यतिदेशेन यगात्मनेपदचिण्चिण्वदिटामतिदेशाद्यगादिसत्त्वेऽपि कर्त्तुरेव बोधाद्व्यापार एवाश्रयान्वयाच्च, अबोधीत्यत्रापि बुध्यतेः कर्त्तरि लुङ् तस्य दीपजनेति चिण् "चिणोलुगिति" तस्य लुक् इति साधनादित्याशंकायामाह।

**उत्सर्गोऽयं कर्म्मकर्त्तृविषयादौ विपर्य्ययात् ॥**
**तस्माद्यथोचितं ज्ञेयं द्योतकत्वं यथागमम् ॥४॥**

(कर्म्मकर्त्तृविषयादौ) पच्यते ओदनः स्वयमेवेत्यादौ अत्र एकौदनाभिन्नाश्रयकः पाकानुकूलो व्यापार इति बोधः। क्रमादित्यादिपदग्राह्यम् अत्र सामान्यविशेषज्ञानपूर्वक एकनारदविषयकज्ञानानुकूलः कृष्णाभिन्नाश्रयकोऽतीतो व्यापार इति बोधः। (यथोचितमिति) सकर्म्मकधातुसमभिव्याहृतभावसाधारणविधिविधेयाच्चिण्यगादिकर्म्म द्योतकमिति भावः ॥ ४ ॥

एवं सूचीकटाहन्यायेन सोपपत्तिकं वाक्यार्थमुपवर्ण्य (फलव्यापारयोरिति) प्रतिज्ञातं धातोर्व्यापारवाचित्वं लडाद्यन्ते भावनाया अवाच्यत्वं वदतः प्रभाकरादीन् प्रति व्यवस्थापयति।

**व्यापारोभावना सैवोत्पादना सैव च क्रिया ॥**
**कृञोऽकर्म्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते ॥ ५ ॥**

पचति पाकमुत्पादयति पाकानुकूला भावना तादृश्युत्पादनेत्यादिविवरणाद्विवीयमाणस्यापि तद्वाचकतेति भावः । व्यापारपदं * फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यतां ध्वनयितुमुक्तम् अतएव पचतीत्यत्राधःसन्तापनत्वफूत्कारत्वचुल्ल्युपरिधारणत्वयत्नत्वादिभिर्बोधः सर्व्वसिद्धः नचैवमेषां † शक्यतावच्छेदकत्वे गौरवापत्त्या कृतित्वमेव तदवच्छेदकं वाच्यं रथो गच्छति ‡ जानातीत्यादौ च व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकरीतिः साध्वी, शक्यतावच्छेदकत्वस्यापि + लक्ष्यतावच्छेदकत्ववद्गुरुणि सम्भवात् तयोर्वैषम्ये वीजाभावात् × नच पचति पाकं करो-

---

* ननु "या क्रिया भावना सैवोत्पादनाऽपि च सा स्मृते" त्युक्तेऽपि क्रियाया भावनात्वलाभे किमिति व्यापारपदोपादानमत आह । व्यापारपदञ्चेति । तथा च व्याप्रियतेऽनेनेतिकरणव्युत्पन्नेन भावव्युत्पन्नेन वा व्यापारपदेन फलानुकूलयावतामधिश्रयणादीनां भावनात्वलाभः क्रियापदेन तु कृतिपदवद्यत्नमात्रार्थकेनोक्तविवरणात्कृतेरेव भावनात्वलाभः स्यादिति तदुपात्तमिति भावः ।

† यद्रीत्या नैयायिकैः कृतित्वस्याऽऽख्यातवाच्यत्वं व्यवस्थापितं तद्रीत्यैव धातोः कृतित्वं शक्यतावच्छेदकं भविष्यतीति तटस्थाऽऽशङ्कां निराकरोति । नचैवमेषामित्यादि । नचेति साध्वीत्यनेनान्वितम् ।

‡ ननु कृतेरेवधात्वर्थत्वे रथादावचेतने तद्बाधात्तादृशप्रयोगानुपपत्तिरत आह—रथो गच्छतीत्यादि ।

+ तथा च शक्तिर्गुरुणाऽपि धर्मेणावच्छिद्यते असति वाधके कृतित्वाल्लक्षणावदित्यनुमानात्तेषु शक्तिः सेत्स्यतीति भावः ।

× असम्भवति समानियते लघौ धर्मे गुरौ तदभावादित्यस्य प्रकृतेऽनवतारेण यद्यवच्छेदकत्वं स्वरूपसम्बन्धविशेषस्तदा तत्स्वरूपत्वं गुरूणामप्यक्षतम् । अथातिरिक्तं तदा गुरुधर्मेऽपि तत्स्वीकार आवश्यकः *( गंगातीरत्वं लक्ष्यतावच्छेदकमिति व्यवहारात् ।* वृत्त्यवच्छेदककोटिप्रविष्टत्वस्योभयत्र साम्याच्च । तत्र न्यूनाऽतिरिक्तवृत्तित्व-

तीति यत्नार्थककरोतिना विवरणाद्यत्नएव[illegible]र्थ इति वाच्यम् । रथो गमनं करोति वीजादिना अंकुरः कृत इति दर्शनात् कृञोयत्नार्थकताया असिद्धेः, किञ्च भावनाया अवाच्यत्वे घटं भावयतीत्यत्रेव घटोभवतीत्यत्रापि द्वितीया स्यात् नचात्र घटस्य कर्तृत्वेन तत्संज्ञया कर्म्मसंज्ञाया बाधान्न द्वितीयेति वाच्यम् अनुगतकर्तृत्वस्य त्वन्मते दुर्व्वचत्वेन घटस्याकर्तृत्वात् कृत्याश्रयत्वस्य कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात् धात्वर्थानुकूलव्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वात् आपि च * भावनाया अवाच्यत्वे धातूनां सकर्म्मकत्वाकर्म्मकत्वविभाग उच्छिन्नः स्यात् स्वार्थफलव्यधिकरणव्यापारवाचित्वं स्वार्थव्यापारव्यधिकरणफलवाचकत्वं वा सकर्म्मकत्वं भावनायावाच्यत्वमन्तरेणासम्भवि, अन्यतमत्वं तत्वमिति चेन्न एकस्यैवार्थभेदनाकर्म्मकत्वसकर्म्मकत्वदर्शनात् तदेतदभिसन्धायाह ( कृञ इति ) अयं भावः व्यापारावाच्यत्वपक्षे फलमा-

---

रूपाऽवच्छेदकत्वमादाय तादृशव्यवहारो यदि तदा सर्वत्रैव तथास्त्विति भावः ।

* नन्वचेतने कृत्याऽऽश्रयत्वरूपकर्त्तृत्वस्य बाधेऽपीतरव्यापाराऽनधीनत्वप्रकारकविवक्षाया विषयव्यापाराश्रयत्वरूपकारकचक्रप्रयोक्तृत्वरूपमेव तत्कर्तृसंज्ञानियामकम् । व्यापारस्य क्वचित्कृतिः । क्वचित्संयोगादिरेव तादृशव्यापाराश्रय एव स्वतन्त्रः कर्त्तेति सूत्रे स्वतन्त्र पदार्थः तत्सूत्रप्रणयनसामर्थ्यात् । तदुक्तं कारक इति सूत्रे भाष्ये । प्रधानेन समवाये स्थाली परतन्त्रा व्यवाये परतन्त्रा किं पुनः प्रधानं कर्त्ता, कथं ज्ञायते कर्त्ता प्रधानमिति यत्सर्वेषु कारकेषु कर्त्ता प्रवर्त्तयिता भवतीति स्थाली काष्ठैः पचतीत्यादौ स्थाल्येव तत्त्वेन विवक्षितेति तद्भावः । वक्ष्यते वाऽधिकमुपरिष्टात् । मीमांसकमते प्रसक्तदूषणोद्धृतिरपि वक्ष्यमाणैव । एवं च घटगततादृव्यापारस्यैव स्वातन्त्र्यविवक्षया कर्त्तृत्वस्य निराबाधेन न द्वितीयाप्रसंगोऽत आह । अपिचेति ।

त्रमर्थइति फलितम् तथा च करोतीत्यादौ यत्नप्रतीतेस्तन्मात्रं वाच्यमभ्युपेयम् तथा च यती प्रयत्नइतिवत् फलस्थानीय यत्न-वाचकत्वविशेषादकर्म्मकतापत्तिः उक्तरीत्या दुर्व्वारेति तथा च (नहि यत्नः) इत्यत्र फलस्थानीयत्वेनेति शेषः (कृञः) इति धातुमात्रोपलक्षणं सर्वेषामप्यकर्म्मकता सकर्म्मकता वा स्यादिति भावः अथ वा (व्यापारो भावना) इत्यर्धेन व्यापारस्य वाच्यत्वं प्रसाध्य फलांशस्यापि तत्साधयन् नैयायिकाभ्युपगतं जानाति करोतीत्यादेः केवलज्ञानयत्नादि क्रियामात्रवाचित्वं दूषयति (कृञ इति)। अयंभावः फलांशस्यावाच्यत्वे व्यापारएव धात्वर्थः स्यात् तथा च स्वार्थफलव्यधिकरणव्यापारवाचित्वादिरूपसकर्मकत्वो-च्छेदापत्तिः। नच कृञादौसकर्मकत्वव्यवहारोभाक्तइति नैयायि-कोक्तं युक्तम्। व्यवहारस्य भाक्तत्वेऽपि कर्मणि * लकारासम्भ-वात्। न हि तीरे गंगापदस्य भाक्तत्वेपिऽपि तेन स्नानादिकार्य्यं कर्त्तुं शक्यम्। एवञ्च (नहि यत्न) इत्यत्र यत्नमात्रमित्यर्थः॥ ५॥

अतएवाह

**किन्तूत्पादनमेवातः कर्म्मवत्स्यात् यगाद्यपि।**
**कर्म्मकर्त्तर्य्यन्यथा तु न भवेत् तद्दृशेरिव॥ ६॥**

(उत्पादनम्) उत्पत्तिरूपफलसाहित यत्नादि कृञर्थइत्यर्थः। फलस्य वाच्यत्वे युक्त्यन्तरमाह (अतइत्यादि) यतः कृञोय त्नमात्रमर्थोनेष्यते (अतः कर्म्मवत्स्यादिति) पदेन कर्म्मवत्कर्म्मणा

---

* मुख्यसकर्मकत्वमादाय शास्त्रस्य चारितार्थ्ये गौणे तद्व्यापारे मानाऽभावादिति भावः।

तुल्यक्रियइति सूत्रं लक्ष्यते। अयमर्थः यतएवास्योत्पादनार्थकता अतः पच्यते ओदनः स्वयमेवेतिवत् क्रियते घटः स्वयमेवेति यगादयोप्युपपद्यन्ते। अन्यथा यत्नस्य कर्म्मनिष्ठत्वाभावात्तन्न स्यात् दृशिवत्। यथा दृश्यते घटः स्वयमेवेति न दर्शनस्य घटावृत्तित्वात्तथा यत्नस्यापीति, तथा प्रयोगानापत्तेरिति॥ ६॥

नन्वेवं कृञादेरिव जानातीत्यादेरपि विषयावच्छिन्नावरणभंगादिफलवाचित्वमावश्यकम् अन्यथा सकर्म्मकतानापत्तेः तथा च ज्ञायते घटः स्वयमेवेति किन्न स्यात्। एवं ग्रामोगम्यते स्वयमेवेत्याद्यपीत्याशंकां मनसिकृत्याह।

**निर्व्वर्त्त्ये च विकार्य्ये च कर्म्मवद्भाव इष्यते।**
**न तु प्राप्ये कर्म्मणीति सिद्धान्तो हि व्यवस्थितः॥**

ईप्सितं कर्म्म त्रिविधं निर्वर्त्त्यं विकार्य्यं प्राप्यञ्च। तत्राद्ययोः कर्म्मवद्भावो, नान्त्ये, प्राप्यत्वञ्च क्रियाकृतविशेषानुपलभ्यमानत्वमिति सुबर्थनिर्णये वक्ष्यते। नह्ययं * घटः केनचिद्दृष्टो ग्रामोऽयं केनचिद्गतइति शक्यं कर्म्मदर्शनेनावगन्तुम्। घटं करोतीति निर्व्वर्त्त्ये, सोमं सुनोतीति विकार्य्ये च, तज्ज्ञातुं शक्यमिति न तत्प्राप्यम्। तथा च घटादेर्दृश्यादौ प्राप्यकर्म्मत्वान्नोक्तातिप्रसंगइति भावः। धातूनां फलावाचकत्वे त्यजिगम्योः पर्य्यायतापत्तिः क्रियावाचकत्वाविशेषात्, फलस्योपलक्षणत्वेऽप्येकक्रियायाएव

* कर्म्मगतविशेषाऽऽधायकक्रियार्थकत्वम् कर्म्मस्थक्रियकत्वं कर्मवद्भावप्रयोजकमिति दर्शयितुं तदन्वयव्यतिरेकौ दर्शयति। नहीत्यादि।

पूर्व्वदेशविभागोत्तरदेशसंयोगजनकत्वादुक्तदोषतादवस्थ्य मित्यपि वदन्ति । तस्मादावश्यकंसकर्म्मकाणां फलवाचकत्वम् अकर्म्मकाणान्तु तन्निर्व्विवादमेव भू सत्तायामित्याद्यनुशासनाच्च । अतएव "द्व्यर्थः पचिरिति" भाष्यं सगच्छतइति दिक् ॥ ६ ॥

एवं सिध्यतु फलव्यापारयोर्वाच्यत्वम् किन्तु आख्यातवाच्यैव सा भावना न धातोः, प्राधान्येन प्रतीयमानव्यापारस्य धात्वर्थतायाः"प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यप्राधान्यमिति" न्यायविरुद्धत्वात् "तदागमे हि दृश्यतइति"* न्यायविरुद्धत्वाच्च। एवञ्च स्वयुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्म्मकत्वम्,

---

* इदं च यः प्रधानं स प्रत्ययार्थ इति न्यायाऽऽकार इत्यभिप्रेत्य, तन्मूलसूत्राऽऽलोचने तु यः प्रत्ययार्थः स प्रधानमिति न्यायाऽऽकारो लभ्यते तथाहि पशुना यजतेति श्रूयते तत्रैकवचनोपात्तमेकत्वं यागे विशेषणमुत प्रकृत्यर्थे इति संशये पशुपदार्थस्य यागं प्रति गुणत्वात्सम्भावितयावत्पशुकरणेन प्रधानाऽऽवृत्तौ प्रधानभंगाऽऽपत्त्या यावद्गुणं प्रधानाऽऽवृत्तेरयोगादेकत्वविशिष्टपशोर्विधाने त्वेकत्वस्य पशुविशेषणतया यागांगत्वाऽभावात्तदविवक्षितमेव स्यादित्यर्थकेन तत्रैकत्वमयज्ञांगमर्थस्य गुणभूतत्वादिति सूत्रेण पूर्वपक्षिते शब्दवत्तूपलभ्यते तदाऽऽगमे हि दृश्यते तस्य ज्ञानं यथाऽन्येषामिति सिद्धान्तसूत्रम् शब्दवत् शब्दवाच्यम् यथा भवति तथोपलभ्यते एकत्वं हि यतस्तदागमे एकवचनसमवधाने दृश्यते ऽतस्तस्य प्राधान्येन प्रतीतिर्यथाऽन्येषामरुणादीनामित्यर्थः । एवं च समानप्रत्ययोपात्तत्वप्रत्यासत्त्या विभक्त्यर्थकरणाऽन्वितस्याऽरुणाऽधिकरणन्यायेन प्रथमं क्रियायामन्वयः पश्चात्प्रकृत्यर्थे तथा च पश्वेकत्वोभयकरणको याग इति बोधनैकत्वस्य यागांगत्वाऽवगमान्नानेकपशुभिर्याग इति तद्भावः । प्राधान्यं च प्रकृत्यर्थाऽविशेषणत्वमेव प्रत्ययार्थमादाय न्यायावताराद्यः प्रत्यार्थ इति भागस्य न्यायघटकत्वं प्रकृते आख्याताऽसमवधाने भावनाऽबोधात्तस्याऽप्राधान्येन भानमिति तत्संगतिरिति बोध्यम् ।

आख्यातार्थव्यापाराश्रयत्वञ्च कर्तृत्वं वाच्यमित्यादि वदन्तं मीमांसकम्मन्यं प्रत्याह ।

**तस्मात्करोतिर्धातोः स्याद्व्याख्यानं न त्वसौ तिङां पक्ववान् कृतवान्पाकं किं कृतं पक्वमित्यपि ॥८॥**

( तस्मात् ) अभिप्रायस्थहेतोः सचेत्थम् । फलमात्रस्य धात्वर्थत्वे ग्रामोगमनवानिति प्रतीत्यापत्तिः संयोगाश्रयत्वात् । फलानुत्पाददशायां व्यापारसत्त्वे पाकोभवतीत्यनापत्तिः व्यापारविगमे फलसत्त्वे पाकोविनष्टइत्यापत्तिश्च । यत्तु भावप्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वान्नानुपपत्तिरिति तन्न कर्त्राख्यातवत् "कर्तरि कृदि" त्यतएव तद्विधानलाभे भावे विधायकानुशासनवैयर्थ्यापत्तेस्तद्विरोधापत्तेश्च । अथ व्यापारोऽपि धात्वर्थ इत्यभ्युपेयमिति चेत्तर्हि धातुतएव सकलव्यापारलाभसम्भवेनाख्यातस्य पृथक्शक्तिकल्पने गौरवमिति । पचतीत्यस्य पाकं करोतीति विवरणात्मा ( करोतिः धातोः) एव ( व्याख्यानं ) विवरणम् अतस्तदपि नाख्यातार्थत्वसाधकमिति भावः मीमांसकोक्तं बाधकमुद्धरन् तन्मतं दूषयति नत्वित्यादिना । नासौ तिङां व्याख्यानम् पक्ववानित्यादावनन्वयापत्तेः । अयं भावः । "प्रकृतिप्रत्ययौ सहार्थं ब्रुतस्तयोः प्रत्ययार्थस्य प्राधान्यम्" इत्यत्रहि विशेष्यतया प्रकृत्यर्थप्रकारकबोधं प्रति तदुत्तरप्रत्ययजन्योपस्थितिर्हेतुरिति कार्यकारणभावः फलितः । तथा च पक्ववानित्यत्र पाकः कर्म्मकारकं, क्तवतुप्रत्ययार्थः कर्तृकारकम् । तयोश्चारुणाधिकरणरीत्या

वक्ष्यमाणास्मद्रीत्या चान्वयासम्भवइति प्रकृतिप्रत्ययार्थयोरन्वय-नियमस्यैवाभावे क ? प्राधान्यबोधक उक्तकार्य्यकारणभावः । नच

सम्बन्धमात्रमुक्तश्च श्रुत्या धात्वर्थभावयोः ।
तदेकांशनिवेशे तु व्यापारोऽस्या न विघ्नतेइति ॥

भट्टपादोक्तरीत्या सम्बन्धसामान्येन कारकाणामन्वयः शं-क्यः, योग्यताविरहात् अन्वयप्रयोजकरूपवत्त्वस्य तत्त्वात् । क्रियात्वमेव हि कारकान्वयितावच्छेदकमिति वक्ष्यते । तदे-तदाविष्कर्त्तुं विवरणेन धात्वर्थक्तवत्वर्थयोः कर्म्मत्वकर्तृत्वे दर्शय-ति कृतवान् पाकमिति । वस्तुतः प्रत्ययार्थः प्रधानमित्यस्य यः प्रधानं स प्रत्ययार्थ एवेति वा, यः प्रत्ययार्थः स प्रधानमेवेति वा नार्थः अजा अश्वा छागीत्यत्र स्त्रीप्रत्ययार्थे स्त्रीत्वस्यैव प्राधान्या-पत्तेः छाग्यादेरनापत्तेश्च। किन्तूत्सर्गोऽयम् विशेष्यत्वादिना बोधस्तु तथाव्युत्पत्त्यनुरोधात्। अतएव नैयायिकानां प्रथमान्तविशेष्यकएव बोधः । लक्षणायामालंकारिकाणां शक्यतावच्छेदकप्रकारकएव बोधो न नैयायिकादीनाम् । घटः कर्म्मत्वमानयनंकृतिरित्यादौ विपर्य्ययेणापि व्युत्पन्नानां नैयायिकनव्यादीनां बोधो न तद्व्युत्प-त्तिरहितानाम् अन्येषां तन्निराकांक्षमेवेत्यादिकं संगच्छते। अतएव "प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्" इत्याह भगवान् पा-णिनिः। प्रधानं प्रत्ययार्थ इति वचनं न कार्य्यम् अर्थस्य अर्थावबोधस्यान्यप्रमाणत्वात् व्युत्पत्त्यनुसारित्वादितिहि तदर्थः । एवं सत्यपि नियामकापेक्षणे "भाव प्रधानमाख्यात" मिति वचन मेव गृह्यतामिति सुधीभिरूह्यम्। "तदागमे हीति" न्यायो विवरण-

ञ्चातिव्याप्तमित्याह (किंकृतं पक्कमिति)। कृञा विवरणं प्रतीतिश्च पक्कमित्यत्रापीति, तत्रापि भावना वाच्या स्यादिति भावः, नन्वस्तु तिङ्इव कृतामपि भावना वाच्येत्यत आह अपीति। तथा-चोभयसाधारण्येन तत्प्रतीतेरुभयसाधारणो धातुरेव वाचकइति भावः! भवद्रीत्या प्रत्ययार्थत्वात्प्राधान्यापत्तिश्चेति द्रष्टव्यम्॥८॥
व्यापारस्य धात्वर्थत्वेसाधकान्तरमाह।

**किं कार्य्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि।**
**किञ्च क्रियावाचकतां विना धातुत्वमेव न॥९॥**

कार्य्यमित्यत्र "ऋहलोर्ण्यदिति" कर्म्मणि ण्यत् पचनीयमि-त्यादौ चानीयर् आदिना ज्योतिष्टोमयाजी इत्यादौ करणे उपपदे कर्तरि णिनिः। एते च क्रियायोगमन्तरेणासन्तस्तद्वाच्यतां बोध यन्ति विना क्रियां कारकत्वासम्भवेन तद्वाचकप्रत्ययस्याप्यसम्भवात्। नच गम्यमानक्रियामादाय कारकयोगइति भाट्टरीतिर्युक्ता आख्यातेऽपि तथापत्तौ तत्रापि भावनाया वाच्यत्वासिद्ध्यापत्तेः। अथ लिंगसंख्यान्वयानुरोधात् कर्तुर्वाच्यत्वमावश्यकमिति तेनाक्षे-पाद्भावनान्वयः स्यादिति मतम् तर्हि संख्यान्वयोपपत्तये आख्या-तेऽपि कर्त्ता वाच्यः स्यात्। पक्कवानित्यादौ कालकारकान्वयानुरो-धाद्भावनाया अपि वाच्यत्वस्यावश्यकत्वाच्चेति भावः। अपिना हेत्वन्तरसमुच्चयः तथाहि नखैर्भिन्नो नखभिन्नः हरिणा त्रातो हरि-त्रात इत्यादौ "कर्तृकरणे कृता बहुलमिति,, समासो न स्यात् पुरुषोराज्ञः भार्य्या देवदत्तस्य इतिवदसामर्थ्यात्। नचाध्याहृत-

क्रियाद्वारा सामर्थ्यं वाच्यं दध्योदनः गुडधाना इत्यादिवत्, अन्यथा तत्रापि अन्नेन व्यञ्जनं भक्ष्येण मिश्रीकरणमिति समासो न स्यादिति वाच्यम् । तत्र विध्यानर्थक्या* दगत्या तथास्वीकारेऽपि हरिकृतमित्यादौ † साक्षाद्धात्वर्थान्वयेनोपपद्यमानस्य कर्तृकरणइत्यस्याक्षेपेण परम्परासम्बन्धे प्रवृत्त्ययोगात् । न चैकस्यां क्रियायामन्वयित्वमेव सामर्थ्यमिति शङ्क्यम्, असूर्य्यम्पश्येत्यादेरसमर्थसमासत्वानापत्तेः । इष्टापत्तौ कृतः सर्व्वोमृत्तिकयेत्यत्र कृतसर्व्वमृत्तिकइत्यापत्तेः ‡ । न चात्र समासविधायकाभावः, ( सह सुपा ) इत्यस्य सत्त्वात्, अन्यथा असमर्थसमासोऽपि विधायकाभावान्न स्यादिति । किञ्च भावनायास्तिङर्थत्वे भाव-

---

* अन्नेनव्यञ्जनमित्यादेरपि पदविधित्वेन समर्थपरिभाषाविषयतया स्वतोऽसमर्थदध्यादिपदानां समासविधानवैयर्थ्यापत्त्योपसेवनादिक्रियाध्याहाराभ्युपगमेऽपीत्यर्थः ।

† कृधातोर्व्यापारार्थकत्वस्वीकारात्तन्निरूपितकर्त्तृत्वस्य हरौ साक्षात्सत्वादध्याहारं विनैव शास्त्रचारितार्थ्ये हरित्रात इत्यादावध्याहृतक्रियाद्वारकासामर्थ्यमादाय तत्प्रवृत्तौ मानाभावादित्यर्थः । कृञोऽव्यापाराऽर्थकत्वाऽनभ्युपगमेत्वध्याहृताऽर्थस्याऽपि सामर्थ्याऽनुपपादकत्वाच्छास्त्रवैयर्थ्यमेव स्यादिति सूचनाय कृतमित्युक्तम् । आदिना शरकृतमित्यादिकरणतृतीयातत्पुरुषपरिग्रहः । केचित्तु कृदर्थे कर्त्रैव तृतीयार्थकर्त्राऽऽक्षिप्तभावनामादाय हरित्रात इत्यादौ नखैर्भिन्न इत्यादौ तु करणसामर्थ्येनाऽध्याहृतां तामादाय सामर्थ्योपपत्तौ न तदनुपपत्तिर्धातोर्भावनावाचकत्वसाधिका । एवं च कृञः फलाऽर्थकत्वेऽपि न समासोऽनुपपत्तिरित्याहुः । तच्चिन्त्यम् ।

‡ मृत्तिकायाः करणतया सर्वपदार्थस्य कर्मतया कृधात्वर्थोऽन्वयित्वादिति भावः ।

यति घटमितिवत् भवति घटमित्यापि स्यात् धात्वर्थफलाश्रयत्वरूपकर्म्मत्वसत्त्वात् नचाख्यातार्थव्यापाराश्रयत्वेन कर्त्तृत्वात् तत्संज्ञया कर्म्मसंज्ञायाबाधान्न द्वितीयेति वाच्यम् आख्यातार्थव्यापाराश्रयत्वस्य कर्तृत्वे पाचयति देवदत्तोविष्णुमित्रेणेत्यत्र विष्णुमित्रस्याकर्तृतापत्तौ तृतीयानापत्तेः ग्रामं गमयाति देवदत्तोविष्णुमित्रामित्यत्र विष्णुमित्रस्याकर्तृतापत्तेः ग्रामस्यगामिकर्म्मतानापत्तेश्च । तथा च ग्रामाय गमयाति देवदत्तोविष्णुमित्रामित्यापि न स्यात् । "गत्यर्थकर्म्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनीति" गत्यर्थकर्म्मण्येव चतुर्थीविधानात्। एतेन णिजन्ते आख्यातार्थ उभयम् तदाश्रयत्वाद्देवदत्तयज्ञदत्तयोः कर्तृतेत्यपास्तम्*। किञ्च तस्मिन् प्रयोगे आख्यातार्थइत्यस्यावश्यकत्वेनाख्यातशून्ये देवदत्तः पक्तेत्यादौ देवदत्तस्याकर्तृतापत्तेरिति दिक् । सूत्रानुपपत्तिमपि मानत्वेन प्रदर्शयन्नुक्तार्थस्य स्वोत्प्रेक्षितत्वं निरस्यति ( किञ्चेति ) धातुसंज्ञाविधायकम् ( भूवादयोधातव ) इति सूत्रम् । तत्र भूश्च वाश्चेति द्वन्द्वः । आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः । ततो भूवौ आदी येषां ते भूवादयः । तथा च भूप्रभृतयो वासदृशा धातवइत्यर्थः । तच्च क्रियावाचकत्वेन तथा च क्रियावाचकत्वे साति भ्वादिगणपठितत्वं धातुत्वं पर्य्यवसन्नम् । अत्र क्रियावाचित्वमात्रोक्तौ

* अपास्तमिति । अयं भावः आख्यातस्य व्यापारद्वयाऽभिधायकत्वेनविष्णुमित्रस्य कर्त्तृत्वोपपादनेऽपि तत्कर्त्तृत्वस्याऽऽख्याताऽभिधानाद्देवदत्तपदोत्तरमिव विष्णुमित्रपदोत्तरं तृतीयादौर्लभ्यमेवमाख्यातार्थव्यापाराश्रयत्वस्यो भयोरप्यविशिष्टत्वात्प्रधानं व्यवहारोच्छेदापत्याहेतुमति चेत्यनुशासनविरोधश्चेति ।

वर्ज्जनादिरूपक्रियावाचके हिरुग्* नानेत्यादावतिव्याप्तिरिति भ्वादिगणपठितत्वमुक्तम् ॥ ९ ॥

तावन्मात्रोक्तौ चाह ।

**सर्व्वनामाव्ययादीनां यावादीनां प्रसङ्गतः ।**
**न हि तत्पाठमात्रेण युक्तमित्याकरे स्फुटम् ॥१०॥**

गणपठितत्वमात्रोक्तौसर्व्वनामाव्ययानामपि धातुत्वं स्यात् । तथा च याः पश्यतीत्यादौ, "आतोधातोः" इत्याकारलोपापत्तिः । ननु लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणान्न सर्व्वनाम्नां ग्रहणं तस्य लाक्षणिकत्वात् इत्यत आह वेत्यादि । अव्यये वा इत्यादावतिप्रसंगः । तादृशस्यैव गणेऽपि पाठेन निर्णयासम्भवात् । तथा च विकल्पार्थको वातीति प्रयोगः स्यादिति भावः । नच गतिगन्धनार्थनिर्द्देशो नियामकः, तस्यार्थानादेशनादिति भाष्यपर्य्यालोचनया आधुनिकत्वलाभात् † ॥ १० ॥

---

* यथाश्रुतमनुरुध्य चेदम् । तदर्थस्य कालानन्वितत्वेन क्रियात्वाऽसम्भवात् । किं तु तावन्मात्रोक्तावाणवयत्यादावतिव्याप्तिर्बोध्या तेषां धातुत्वे च शास्त्राविषयतया साधुत्वाऽऽपत्तेरिति बोध्यम् ।

† भीमसेनादिप्रणीतत्वाऽवगतेरित्यर्थः । तथा च भूवादिसूत्रे परिमाणग्रहणं कर्त्तव्यम् कुतोह्येतत् भूशब्दोधातुसंज्ञको भवति न पुन र्भ्वैधशब्द इति यद्यप्यर्थनिर्द्देशस्य सूत्रकृत्प्रणीतत्वमपि तथा च चुट्ट इति सूत्रे यदयमिरिक्तः कांश्चिन्नुमनुषक्तान् पठति उबुन्दिर्निशामने स्कन्दिर्गतिशोषणयोरिति तेन नेरितामिदिद्विधिरिति भाष्ये उक्तं तथापि भाष्यस्यप्रामाण्यात्सर्वधात्वर्थनिर्द्देशस्याऽपाणिनियत्वेन न तन्निर्द्देशस्य नियामकतेति भावः चुलुम्पादीनां स्तम्भ्वादीनांच कास्यनेकाचआमिति वचनादुदित्करणाच्च धातुतेति दिक् ॥

नन्वस्तु क्रियावाचकत्वे सति गणपठितत्वं धातुत्वं क्रिया च धात्वर्थएव न व्यापार इत्याशङ्कां समाधत्ते ।

**धात्वर्थत्वं क्रियात्वञ्चेद्धातुत्वञ्च क्रियार्थता ।**
**अन्योन्यसंश्रयः स्पष्टस्तस्मादस्तु यथाकरम् ॥**

यदि क्रियात्वं धात्वर्थत्वमेव तर्हि धातुत्वग्रहे तदर्थत्वरूपक्रियात्वग्रहः क्रियात्वग्रहे च तदवच्छिन्नवाचकत्वघटितधातुत्व ग्रह इत्यन्योन्याश्रयइति ग्रहपदं पूरयित्वा व्याख्येयम् । यथाश्रुते चान्योन्याश्रयस्योत्पत्तौ ग्रहे वाऽप्रतिबन्धकत्वाभ्युपगमेनासङ्गत्यापत्तेः । न चान्यतमत्वं धातुत्वं भूवादयइत्यस्य वैयर्थ्यापत्तेरित्यभिमेत्याह ( अस्त्विति ) व्यापारसन्तानः क्रिया तद्वाचकत्वे सति गणपठितत्वमित्यर्थः । ननु सत्तादीन् फलांशानन्यतमत्वेनादाय तद्वाचकत्वे सति गणपठितत्वं लक्षणमुच्यताम् । धात्वर्थत्वात्तेषां क्रियाशब्देन व्यवहारो भाष्यादौ कृतोऽप्युपपत्स्यतइति चेन्न अन्यतममध्ये विकल्पस्यापि विकल्पयतीति प्रयोगानुसारात् प्रवेशावश्यकत्वेन तदर्थके वेत्यव्यये उक्तरीत्या गणपठितत्वसत्वेनातिव्याप्तेरिति ॥ ११ ॥

नन्वस्यैव धातुत्वे अस्तीत्यादौ क्रियाप्रतीत्यभावादस्त्यादीनां तद्वाचकानामधातुत्वप्रसङ्ग इत्यत आह ।

**अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना ।**
**अन्यत्राशेषभावात्तु सा तथा न प्रकाशते ॥१२॥**

(अस्त्यादौ) अस्भुवीत्यादौ (धर्म्यंशे) धर्म्मिभागे (भाव्ये)

भाव्यत्वेन विवक्षिते । (अस्त्येव) प्रतीयतएव । अयमर्थः स ततो गतो न वेति प्रश्ने महता यत्नेनास्तीति प्रयोगे सत्तारूपफलानुकूला भावना प्रतीयतएव उत्पत्त्यादिबोधने * तु सुतरां "रोहितोलोहिताद।सीद्धुन्धुस्तस्य सुतोऽभवदित्यादि" दर्शनात् । किञ्च अत्र भावनाविरहे लडादिव्यवस्था न स्यात् तस्याएव वर्तमानत्वादिविवक्षायां तद्विधानात् ।

"क्रियाभेदाय कालस्तु संख्या सर्वस्यभेदिकेति"। वाक्यपदीयादिति । नन्वेवमस्तीत्यत्र स्पष्टं कुतोन बुद्ध्यतइत्यतआह (अन्यत्रेति) (अशेषभावात्) भावनायाः फलसमानाधिकरणत्वात् । तथा च भावनायाः फलसामानाधिकरण्यं तदस्पष्टत्वे दोषइतिभावः । नन्वेवं किं करोतीति प्रश्ने पचतीत्युत्तरस्येवास्तीत्युत्तर-

---

* ननु स ततो गतो न वेति वाक्याद् गेहाद्यवधिकविभागाऽनुकूलव्यापाराऽऽश्रयत्वतदभावाऽन्यतरस्य जिज्ञास्यत्वमवगम्यते महता यत्नेनाऽस्तीति वाक्यात्त्वस्तेर्व्यापाराऽर्थकत्वाऽभ्युपगमेऽपि चैत्रादिकर्तृकसत्ताऽनुकूलव्यापार एवेति कथमेतयोः प्रश्नोत्तरत्वं । तथाहि यद्धर्माविच्छिन्ने यद्धर्माऽवच्छिन्नस्य सम्बन्धो यत्प्रश्नवाक्यात्प्रतीयते तद्धर्माऽवच्छिन्ने जिज्ञासिततद्धर्माऽवच्छिन्नसम्बन्धबोधवाक्यस्योत्तरता । यदाहुः जिज्ञासितपदार्थस्य संसर्गो येन गम्यते तदुत्तरमिति प्रोक्तमन्यदा भासशब्दितमिति यथा घटत्वाऽवच्छिन्ने जिज्ञासितधर्माऽवच्छिन्नसम्बन्धबोधकस्य कस्माद् घट इति प्रश्नवाक्यस्य घटत्वाऽवच्छिन्ने जिज्ञासितदण्डत्वाऽवच्छिन्नस्य हेतुहेतुमद्भावबोधकं दण्डाद् घट इति वाक्यमुत्तरम् प्रकृते तु गत इति नेति वेत्युत्तरं युज्यते । किंचोक्तप्रश्ने न सत्तासाधकव्यापारस्य जिज्ञास्यत्वाऽनवगमात्कथमेतस्योत्तरत्वम् तथात्वेऽपि पूर्वोत्तरवाक्ये यत्नेनेत्युपादानाद्यत्नपदोपस्थाप्ययत्ननिष्पाद्यत्वबोधनैवोत्तरत्वसिद्ध्या न ततोधातोर्व्यापारार्थकत्वसिद्धिरत आह । उत्पत्त्यादीति ।

मपि स्यादिति चेत् इष्टापत्तेः। आसन्नविनाशं कञ्चिदुद्दिश्य किं करोतीति प्रश्नेऽस्ती त्युत्तरस्य सर्व्वसम्मतत्वात्। इतरत्र तु सुस्थतया निश्चिते किं करोतीति प्रश्नः पाकादिविशेषगोचर एवे-त्यवधारणादस्तीति नोत्तरमिति ॥ १२ ॥

नन्वेवं भावनायाः फलनियतत्वात् फलाश्रयस्यच कर्म्म-त्वात्सर्व्वेषां क्रियावाचकत्वे सकर्म्मकतापत्तिरित्यत आह।

**फलव्यापारयोरेकनिष्ठतायामकर्म्मकः।**
**धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृतः ॥१३॥**

( एकनिष्ठतायाम् ) एकमात्रनिष्ठतायाम् भिन्नाधिकरणावृ-त्तितायामिति यावत्। तेन गम्यादौ फलस्य कर्त्तृनिष्ठत्वेऽपि ना-तिव्याप्तिः। ( अकर्म्मकः ) यथा भ्वादिः ( तयोः ) फलव्या-पारयोः आश्रयभेदे सकर्म्मक इत्यर्थः उक्तश्च वाक्यपदीये।

आत्मानमात्मना विभ्रदस्तीति व्यपदिश्यते।
अन्तर्भावाच्च तेनासौ कर्म्मणा न सकर्म्मकइति।

( विभ्रदिति ) तेन स्वधारणानुकूलोव्यापारोऽत्रापि गम्य-तइति भावः तेन कर्म्मणा सकर्म्मकत्वन्तु न अन्तर्भावात् फलां-शेन सामानाधिकरण्यसत्वादित्यर्थः ( आत्मानमिति ) जा-नाति इच्छतीत्यादौ च द्वावात्मानौ शरीरात्मा अन्तरात्मा च। तत्रान्तरात्मा तत्कर्म्म करोति येन शरीरात्मा सुखदुःखे अनुभव-तीति कर्म्मवत्कर्मणेति सूत्रीयभाष्योक्तरीत्या भिन्नाधिकरणनिष्ठ-तामादाय सकर्म्मकत्वमित्यवधेयम् ॥ १३ ॥

नन्वसत्व*भूतक्रियाया धात्वर्थत्वे पाक इत्यत्रापि तत्प्रत्यया-पत्तिः । न चेष्टापत्तिः कृदभिहितोभावो द्रव्यवत् † प्रकाशतइति भाष्यविरोधादित्यत आह ।

**आख्यातशब्दे भागाभ्यां साध्यसाधनरूपता ।**
**प्रकल्पितौ यथा शास्त्रे स घञादिष्वपि क्रमः १४॥**

(आख्यातशब्दे) पश्यमृगोधावतीत्यादौ । (भागाभ्याम्) तिङन्ताभ्याम् प्रकृतिप्रत्ययभागाभ्यामिति विवरणकारोक्तमपव्याख्यानम् पचतीत्यत्रापि भागद्वयसत्वात् (साध्यसाधनरूपता) यथाक्रमं ग्राह्या । साध्यत्वं क्रियान्तराकाङ्क्षानुत्थापकरूपवत्वम् । साधनत्वं कारकत्वेनान्वयित्वम्, (सघञादिष्वपीति) प्रकृत्या साध्यावस्था, प्रत्ययेन साधनावस्था, इयान्विशेषः, घञाद्युपस्थाप्या लिंगसंख्यान्वयिनी कारकत्वान्वायिनी च, आख्यातान्तोपात्ता तु नैवम्, तथापि कारकत्वेनान्वयित्वमात्रेण दृष्टान्तदार्ष्टान्तिकतेत्यवधेयम्, नच घञन्ते धातुना तथाभिधाने मानाभावः, ओदनस्य पाकइति कर्म्मषष्ठ्या मानत्वात्, नचाध्याहृततिङन्तक्रियान्वयात् षष्ठी "कर्तृकर्म्मणोः कृतीति" कृदन्तेन योगएव

---

* क्रियाऽन्तराऽऽकांक्षाऽनुत्थापकताऽवच्छेदकधर्माऽऽक्रान्ताया इत्यर्थः ।

† द्रव्येण नामार्थेन तुल्यं प्रकाशते भासत इत्यर्थः । द्रव्यधर्माणि लिंगसंख्याकारकत्वानि गृह्णातीति यावत् । यद्वा । द्रव्यं क्रियाकांक्षोत्थापकतावच्छेदकरूपसिद्धत्ववत् तेन तुल्यं प्रकाशते इत्यर्थः सिद्धत्वेन भासत इति यावत् । तथा च तादृशभाष्येणाऽऽपाद्यव्यतिरेकानिर्णये तद्धेतुभूतप्रामाण्योपगमादिष्टापत्तेरसुकरत्वादिति भावः ।

तद्विधानात् "न लोकाव्ययनिष्ठाखलर्थतृनामिति" लादेशयोगे षष्ठीनिषेधाच्च, एवं रीत्या काष्ठैः पाकइत्यादावपीष्टमेव, एवं फलांशोऽपि धातुना असत्वावस्थापन्नएवोच्यते, अतएव स्तोकं पचतीतिवत् स्तोकं पाकेत्युपपद्यते इति ॥ १४ ॥

एतदेव स्पष्टयति ।

**साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।**
**सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥**

नच घञादिभिः सिद्धत्वेनाभिधाने मानाभावः, पाकइत्युक्ते भवति नष्टोवेत्याद्याकाङ्क्षोत्थापनस्यैव मानत्वात् धातूपस्थाप्यायांतदसम्भवस्योक्तत्वात् स्तोकः पाकः इत्यनापत्तेश्च । तस्माद्धात्वर्थान्वये स्तोकादिशब्देभ्यो द्वितीया घञर्थान्वये प्रथमा पुंल्लिंगता चेति तत्सिद्ध्ये घञादेः शक्तिरुपेया, एतेन घञादीनां प्रयोगसाधुतामात्रमिति नैयायिकनव्योक्तमपास्तम् । नच घञन्तशक्त्युपस्थाप्यान्वये स्तोकः पाकइति भवतीति वाच्यम्, घञन्तानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवादनुशासनाच्च घञादेरेव तथाशक्तिकल्पनादिति दिक्, एवञ्च घञ्शक्त्यभिप्रायेण कृदभिहितइति भाष्यमतो न तद्विरोधइति भावः ॥ १५ ॥

ननु कारकाणां भावनान्वयानियमएव पाकइत्यत्रापि कर्म्म षष्ठ्यनुसारेण भावनाया वाच्यत्वं सिध्येत् सएव कुतइत्याशङ्कां समाधत्ते ।

**सम्बोधनान्तं कृत्वोऽर्थाः कारकं प्रथमोवतिः ।**
**धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ् ॥ १६ ॥**

सम्बोधनान्तस्य क्रियायामन्वयः, त्वं ब्रूहि देवदत्तेत्यादौ निघातानुरोधात् "समानवाक्ये निघातयुष्मदस्मदादेशा" इत्यनेन समानवाक्यएव तन्नियमात्, उक्तं हि वाक्यपदीये ।

सम्बोधनपदं यच्च तत् क्रियायाविशेषणम् * ।
व्रजानि देवदत्तेति निघातोऽत्र तथासतीति ।

पचाति भवति देवदत्तेत्यादौ तु सूत्रभाष्यादिरीत्यैकवाक्यतासत्वात् स्यादेव निघातः । "तिङ्ङतिङ"इति सूत्रेऽपि तिङन्तानामप्येकवाक्यतास्वीकारात् । एकतिङ् वाक्यमिति वदतां वार्तिककाराणां मते परं न । वस्तुतः एकतिङ्विशेष्यकं वाक्यमिति तदभिप्रायस्य हेलाराजीयादौ वैयाकरणभूषणेऽस्माभिश्च प्रतिपादितत्वात्तन्मतेऽपि भवत्येवेत्यवधेयम् । ( कृत्वोऽर्थाः ) "क्रियाभ्यावृत्तिगणने कृत्वसुच्" इति क्रियायोगे तत्साधुत्वोक्तेः क्रियाया अभ्यावृत्तिः पुनः पुनः जन्म तस्मिन् द्योत्ये इति तदर्थात् । ( कारकम् ) कारके इत्यधिकृत्य तेषां व्युत्पादनात् । कारकशब्दो हि क्रियापरः करोति कर्तृकर्म्मादिव्यपदेशानिति व्युत्पत्तेः । तथाचाग्रिमेष्वपादानादिसंज्ञाविधिषु क्रियार्थककारकशब्दानुवृत्त्या क्रियान्वयिनामेव संज्ञेति भाष्ये स्पष्टम् ( प्रथमोव-

---

* विशेषणमिति । स्वोद्देश्यकप्रवर्त्तनाविषयत्वरूपपरम्परासम्बन्धेनेत्यर्थः । व्रजानीत्यस्य हि जानीहीति शेषः । "सिद्धस्याऽभिमुखीभावमात्रं सम्बोधनं विदुःप्राप्तोऽभिमुख्यो हि जनः क्रियासु विनियुज्यते" इति वदता प्रवर्त्तनाविषयक्रियायामेव तदन्वयबोधनात् । प्रवर्त्तनोद्देश्यस्यैव तद्विषयक्रियोद्देश्यत्वादुद्देश्यविधेयभावस्य तयोः संसर्गमर्य्यादया लाभादेकवाक्यतया निघात इति तदर्थः। शाब्दबोधस्तत्र सम्बोधनविषयदेवदत्तोद्देश्यकप्रवर्त्तनाविषयं मत्कर्त्तृकव्रजनकर्मकज्ञानमिति ।

तिः ) "तेन तुल्यं क्रिया चेद्वतिः" इति विहितः तत्र यत्तुल्यं सा क्रिया चेदित्युक्तत्वात् । ( धातुसम्बन्धाधिकारे ) "धातुसम्बन्धे प्रत्ययाः" इत्यधिकृत्य तेषां विधानात् । ( असमस्तनञ् ) समासायोग्यः प्रसज्यप्रतिषेधीयोनञित्यर्थः । उत्तरपदार्थान्वयेऽपि समासविकल्पेन पक्षे असमस्तत्वात् यथाश्रुतग्रहणायोगात् ! न चासमस्तनञः क्रियान्वये मानाभावः न त्वं पचसि न युवां पचथः चैत्रोन पचति घटोन जायते इत्यादौ क्रियाया एव निषेधप्रतीतेः । अतएव विद्यमानेऽपि घटे तथा प्रयोगः । तथा च घटोनास्तीत्यत्राप्यस्तित्वाभावएवबोध्यते । नहि घटो न जायते नास्तीत्यनयोर्धात्वर्थभेदमन्तरेणास्ति विशेषः । तथा च भूतले न घटइत्यत्राप्यस्तीत्यध्याहार्य्यम् । प्रकारतासम्बन्धेन नञर्थविशेष्यकबोधे धातुजन्यभावनोपस्थितेर्हेतुत्वस्य क्लृप्तत्वात् । शेषं नञर्थनिर्णये वक्ष्यते ॥ १६ ॥

**तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम् ।**
**साधुत्वमष्टकस्यास्य क्रिययैवावधार्य्यताम् १७॥**

"यस्य च भावेन भावलक्षणम्" इत्यत्र भावनार्थकभावशब्देन तद्योगे साधुत्वाख्यानलाभात् "षष्ठी चानादरे" इति तदग्रिमसूत्रेऽपि चकाराद्भावेनेत्यप्यन्वेतीत्यर्थः ( साधुत्वमिति ) तत्स्वरूपन्तु वक्ष्यते (क्रिययैवेति) अयं भावः* । भूवादिसूत्रादिषु

* ननु क्रिययैवाऽवधार्य्यतामितिमूलेन क्रियाऽन्वय एवोक्तानां साधुत्वं लभ्यते इति सत्यमेव तथापि भाष्ये क्रियापदस्य फलेऽपि प्रयोगात्साक्षात्परम्परया वा क्रियाफलाऽन्वयेनाऽपि तेषां साधुत्वोपपत्तौ नोकरीसिध्रौतोर्व्यापारवाचकत्वसाधिकेत्याशङ्कयाऽऽशयं प्रकाशयति । अयम्भावइति ।

प्राय: क्रियाशब्देन भावनाव्यपदेशात्तत्र तस्य साङ्केतिकी शक्तिः फलांशे क्काचित्कः क्रियतइति यौगिकः प्रयोगः । तथा च संज्ञा-शब्दस्यानपेक्षप्रवृत्तत्वेन बलवत्त्वाद्भावनान्वयएव साधुता लभ्यते । अतएव संज्ञाशब्दप्राबल्यात् रथन्तरमुत्तराग्रन्थपठितऋक्ष्वेव गेयम् नतु वेदे तदुत्तरपठ्यमानऋक्ष्विति नवमे निर्णीतम् । किञ्च फलांशोऽपि भावनायां विशेषणं कारकाण्यपि क्कचित्तथाभूतानीति । "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यादिति" न्यायेन सर्व्वे सेवका राजानमिव भावनायामेव परस्परनिरपेक्षाण्य-न्वियन्ति। न हि भिक्षुकोऽपि भिक्षुकान्तरं याचितुमर्हति सत्यन्य-स्मिन्नभिक्षुकइति न्यायेनापि फलं त्यक्त्वा भावनायामेवान्विय-न्तीति मीमांसका अपि मन्यन्ते । एवञ्च विशेष्यतया कारकादि-प्रकारकबोधं प्रति धातुजन्यभावनोपस्थितिर्हेतुरिति कार्य्यकारण-भावस्य क्लृप्तत्वात् यत्रापि पक्ता पाकइत्यादौ भावना गुणभूता तत्रापि क्लृप्तकार्य्यकारणभावानुरोधात्तस्यामेवान्वयइत्यवसीयते इत्यादि भूषणे प्रपञ्चितम् । केचित्तु भूतले घटः देवदत्तोघटमित्या-दावन्वयबोधाकाङ्क्षानिवृत्त्योरदर्शनान्न तद्व्यतिरेकेणसाधुत्वलाभ-इत्याहुः ॥ १८ ॥

स्वयमुपपत्तिमाह ।

**यदि पक्षेऽपि*वत्यर्थः कारकञ्च नञादिषु ।**
**अन्वेति त्यज्यतां तर्हि चतुर्थ्यास्पृहिकल्पना ॥**

---

* ननु सम्बोधनान्तादीनां क्रियान्वये एव साधुत्वे पर्वतो वन्हि-मान्महानसवदित्यादौवत्यर्थसादृश्यस्य कथं पर्वतेऽन्वयः कथं वा भूतले

पर्व्वतोवह्निमान् धूमात् महानसवत् भूतले न घटः भूतले घट इत्यादिपदात् एवमादिष्वनुशासनविरोधेऽपि यदि साधुत्वमन्वयश्चाभ्युपेयते तर्हि चतुर्थ्यां स्पृहिकल्पनापि त्यज्यतामित्यर्थः। अनुशासनानुरोधतौल्ये अर्धजरतीयम*युक्तमिति भावः ॥१८॥

एवं कर्त्रादौ विहितानामिन्यादीनां क्रिययैवान्वयइत्याह।

**अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः।**
**क्रिया सम्बध्यते तद्वत्कृतपूर्व्यादिषु स्थिता॥**

न विविच्य ग्रहो ग्रहणं यस्याः सा अविग्रहा गुणीभूतेति यावत्। तथा च ग्रामं गतइत्यत्र यथा क्तप्रत्ययार्थे गुणीभूतापि क्रिया ग्रामादिकर्म्मभिः सम्बध्यते तथा कृतपूर्वी† कटमित्यत्रापि

---

न घट इत्यत्र सप्तम्यर्थभूतलाऽऽधेयत्वस्य तथाऽभाव इत्यत आह। मूले। यदिपक्षेऽपीति। पक्षेप्रतिज्ञावाक्यजन्यबोधविशेष्ये सन्दिग्धसाध्यके धर्मिणि पर्वतादाविति यावत्।

* इदमर्थे गहादित्वाच्छः क्वचिदनुशासनाऽनुरोधः क्वचिन्नेत्यर्द्धजरतीसदृशमित्यर्थः। तथा च स्वीयसिद्धान्तप्रच्युतिरूपबाधकभियाऽत्राऽपि पर्वतो वह्निमान् भवितुमर्हतीत्येव प्रतिज्ञाङ्गीकरणीया न तु क्रियावाचकपदशून्या सेति नोक्तनियमे व्यभिचारो भूतले न घट इत्यादौ यद्वक्तव्यं तत्तूक्तं वक्ष्यते वाऽधिकमिति भावः।

† नन्वत्र कर्मणि क्ते कटशब्दादनभिहिताऽधिकारीय द्वितीयाऽनुपपत्तिः भावे क्तस्तु सकर्मकाद्गगनकुसुमायमान एव तयोरेवेति नियमात्। अतएव नपुंसके भावेऽपि न सः। तथा च कथ मुक्तदार्ष्टान्तिकवाक्योपपत्तिरिति चेदत्राऽऽहुः। कर्मणो विशेषरूपेण प्राग विवक्षयाऽकर्मकत्वाद्भावे प्रत्यये तदन्तस्य पूर्वशब्देन समासे सपूर्वाच्चेतीनिः पश्चात्तु कर्मणो विशेषरूपस्य विवक्षया तत्र द्वितीयेति इदं च कर्तृकर्मणोः कृतीति भाष्ये स्पष्टम्। इदृशाविवक्षाऽविवक्षे च तद्भाष्यप्रामाण्यात्कृतपूर्वीत्यादिविषय एव नाऽन्याविषयइति बोध्यम्।

गुणभूता इन्यादिभिरित्यर्थः। नच वृत्तिमात्रे समुदायशक्तेर्वक्ष्यमाणत्वात्तत्रान्तर्गता भावना पदार्थैकदेशइति कथं तत्रान्वयइति वाच्यम् नित्यसापेक्षेष्वे*कदेशेऽपि "देवदत्तस्यगुरुकुलं" "चैत्रस्यनप्ते त्यादाविवान्वयाभ्युपगमात्। एवं भोक्तुं पाकः भुक्त्वा पाकइत्यपि द्रष्टव्यम् ॥ १९ ॥

अतिप्रसङ्गमाशङ्क्य समाधत्ते।

**कृत्वोर्थाः क्त्वातुमुन्वत्स्युरिति चेत्सन्ति हि क्वचित्**
**अतिप्रसङ्गोनोद्भाव्योऽभिधानस्य समाश्रयात् ॥**

भोक्तुं पाकः भुक्त्वा पाकइत्यादौ "तुमुण्वुलौ क्रियायां क्रियार्थायाम्' "समानकर्तृकयोः पूर्व्वकाल,, इति क्रियावाचकोपपदे क्रिययोः पूर्व्वोत्तरकाले विधीयमाना अपि तुमुन्नादयो गुणभूतां तामादाय यथा जायन्ते तथा कृत्वोऽर्था अपि स्युः। एकः पाकइत्यत्र "एकस्य सकृच्च,, द्वौपाकौ त्रयश्चत्वारइत्यत्र "द्वित्रिचतुर्भ्यः सुच्,,। पञ्चेत्यत्र कृत्वसुच् स्यात्। तथा च सकृत्पाकः द्विः त्रिश्चतुः पाक इत्याद्यापत्तिरिति चेदिष्टापत्तिः द्विर्वचनमित्यादिदर्शनात्। अतिप्रसङ्गस्त्वनभिधानान्नेत्याह। अतीति। "नहिवचिरन्तिपरः प्रयुज्यत,, इत्याद्यभियुक्तोक्तरीत्या समाधेयमिति भावः। केचित्तु "क्रियाभ्यावृत्तिगणन,, इत्यत्र क्रियाग्रहणं व्यर्थं तस्याए-

---

* तथा च गुरुत्वादेरन्यनिरूप्यत्वेन तदुपस्थितौ नियमेन जायमानाया निरूपकाऽऽकाङ्क्षाया निवृत्तये देवदत्ताऽऽद्यन्वयवत्प्रकृतेऽपि किं साधकं गमनरूपसाध्यमिति साधनाऽऽकाङ्क्षानिवृत्तये ग्रामादिकर्माऽन्वयस्याऽऽवश्यकत्वान्न दृष्टान्ताऽसङ्गतिरिति भावः।

वाभ्यावृत्तिसम्भवेन सामर्थ्यात्तल्लाभात् । तथा च साध्यमात्रस्वभावक्रियालाभाय तदिति वाच्यम् । नच पाकइत्यादौ तादृशीति नातिप्रसङ्गः । द्विर्वचनामिति च द्विःप्रयोगोद्विर्वचनमिति व्युत्पत्त्या "द्विर्वचनेऽचीति,, ज्ञापकं वा आश्रित्योपपादनीयमित्याहुः ॥ २० ॥

ननु सिद्धान्ते बोधकतारूपा शक्तिराख्यातशक्तिग्रहवतां बोधादावश्यकी इति धातोरेव भावना वाच्या नाख्यातस्येति कथं निर्णय इत्याशङ्कां समाधत्ते ।

**भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम् ।**
**साधुत्वं तदभावेऽपि बोधो नेह निवार्य्यते ॥ २१ ॥**

भेद्यं विशेष्यं भेदकं विशेषणं तयोर्यः सम्बन्धस्तस्य योभेदः तन्निबन्धनं साधुत्वम् । अयमर्थः । व्याकरणस्मृतिः शब्दसाधुत्वपरा तत्रैवावच्छेदकतया कल्पयधर्म्मस्य शक्तित्वं वदतां मीमांसकानां पुनः शक्तत्वं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णयएव शक्तिनिर्णयउच्यते । अतिरिक्तशक्तिवादेऽप्याख्यातानामसाधुता भावनायां स्यादेव तथा च चतुर्थ्यर्थे तृतीयाप्रयोगवद्धात्वर्थभावनायामाख्यातप्रयोगे याज्ञे कर्म्मण्यसाधुशब्दप्रयोगात् "नानृतं वदे,,दिति निषेधोल्लंघनप्रयुक्तो प्रायश्चित्तं दर्शनान्तरीयव्युत्पत्तिमतां स्यादिति । ननु त्वन्मते नानृतमिति निषेधः क्रत्वर्थएव न सिध्यते आख्यातेन कर्त्तुरुक्तत्वात् श्रुत्या पुरुषार्थएव स्यात् प्रकरणाद्धि क्रत्वर्थता तच्च श्रुतिविरोधेबाध्यतइति चेन्न तिङर्थस्तु विशेषणमित्यनेन परिहृतत्वात् न हि गुणभूतः कर्त्ता निषेधं स्वाङ्गत्वेन

ग्रहीतुमलम् भावना तु प्रधानं तं ग्रहीतुं समर्थेति प्रकरणात् क्रत्वर्थतैव। अस्तु वा क्रतुयुक्तपुरुषधर्म्मः अनुष्ठानविशेषाभावात् "जञ्जभ्यमानो) नु ब्रूयान्मयिदक्षक्रतू,, इति वाक्योक्तमन्त्राविधि-वदित्यादि भूषणे प्रपञ्चितम् । नन्वाख्यातस्य भावनायामसाधुत्वे ततस्तद्बोधो न स्यात् साधुत्वज्ञानस्य शाब्दबोधहेतुत्वादित्यत आह बोधइति असाधुत्वेऽपि साधुत्वभ्रमाद्बोधोऽस्तु नाम अपभ्रंशवत् । असाधुत्वन्तु स्यादेवेतिभावः वस्तुतः साधुत्वज्ञानं न हेतुस्तद्व्यति-रेकनिर्णयोऽपि न प्रतिबन्धक इत्यसाधुरनुमानेनेत्यत्र वक्ष्यामः २१॥

रङ्गोजिभट्टपुत्रेण कौण्डभट्टेन निर्म्मिते ।
पूर्णोभूषणसारेऽस्मिन् धात्वाख्यातार्थ निर्णयः ।

इति वैयाकरणभूषणसारे धात्वर्थाख्यातसामान्यार्थयोर्निरूपणम् ।

---

## अथ लकारार्थनिरूपणम् ।

प्रत्येकं दशलकाराणामर्थं निरूपयति ।

**वर्त्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति ।**
**विध्यादौ प्रार्थनादौच क्रमात्ज्ञेया लडादयः २२**

लडादयश्चितः षट् क्रमेणार्थेषु द्रष्टव्याः । तथाहि वर्त्तमाने-ऽर्थे लट्,"वर्त्तमाने लड़्,, ति सूत्रात् । प्रारब्धापरिसमाप्तत्वं भूत-भविष्यद्भिन्नत्वं वा वर्त्तमानत्वम् । पचतीत्यादावधिश्रयणाद्यधः-श्रयणान्ते मध्ये तदस्तीति भवति लट्प्रयोगः । आत्मास्ति पर्व्वताः

सन्तीत्यादौ तत्तत्कालिकीनां क्रियाणामनित्यत्वात्तद्विशिष्टस्योत्पत्त्यादिकमादाय वर्त्तमानत्वमूह्यम् उक्तञ्च भाष्ये "इह भूतभाविष्यद्वर्त्तमानानां राज्ञां क्रियाः तिष्ठतेरधिकरणमिति,, ।

परतोभिद्यते सर्व्वमात्मा तु न विकल्पते ।

पर्व्वतादिस्थितिस्तस्मात्पररूपेण भिद्यत इति ।

वाक्यपदीये च । एवं "तमआसीत्,, "तुच्छेनाभ्वपिहितं यदासीत्,, "अहमेकः प्रथममासं वर्त्तामि च भविष्यामि,, चेत्यादिश्रुतयोऽपि योज्याः, तच्च वर्त्तमानत्वादि लडादिभिर्द्योत्यते, क्रियासामान्यवाचकस्य तद्विशिष्टे लक्षणायां लडादिस्तात्पर्य्यग्राहकत्वेनोपयोगात्, अन्वयव्यतिरेकाभ्यां * तद्रूपं लडादिवाच्यमेव, अन्यथाप्रत्ययानां वाचकत्वविलोपापत्तिरित्यपि पक्षान्तरम् ॥

लिडर्थमाह परोक्षे इति "परोक्षे लिडिति,, सूत्रात् , कालस्तावदद्यतनानद्यतनभेदेन द्विविधः द्विविधोऽपि भूतभविष्यद्रूपः, तत्रानद्यतने भूते परोक्षे लिडित्यर्थः, तेनाद्यतने भूते अनद्यतने चे न लिट् प्रयोगः स्यात्, परोक्षत्वञ्च † साक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वम्, नच "क्रिया नामेयमत्यन्तापरिदृष्टा पूर्व्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितु,, मिति

---

* वाचकत्वपक्षमवलम्ब्याऽऽह । अन्वयव्यतिरेकाभ्यामित्यादि । न च तक्रकौण्डिन्यन्यायात्कर्त्राद्यर्थे बाधः शक्तताऽवच्छेदकभेदात् किं चैवं लःकर्मणीतिसूत्रं निरवकाशं स्यात् स्थलाऽन्तरेऽपि विध्याद्यर्थैर्बाधसम्भवादिति भावः ।

† ननु परोक्षत्वं प्रत्यक्षाऽन्यज्ञानविषयत्वम् । तथा च प्रत्यक्षक्रियायामपि श्रुतानुमितत्वयोः सत्वात्पपाचेत्यादिप्रयोगाऽऽपत्तिरत आह । परोक्षत्वञ्चेति ।

भाष्यात्तस्या अतीन्द्रियत्वेन परोक्षे इत्यव्यावर्त्तकमितिशङ्क्यम् पिण्डीभूतायानिदर्शयितुमशक्यत्वेऽप्यवयवशः साक्षात्करोमीति प्रतीतिविषयत्वसम्भवात् अन्यथा पश्यमृगोधावतीत्यत्र तस्या दर्शनकर्म्मता न स्यादिति प्रतिभाति व्यापाराविष्टानां क्रियानुकूलसाधनानामेवात्र पारोक्ष्यं विवक्षितमतोनोक्तदोषः अयं पपाचेत्याद्यनुरोधाद्व्यापाराविष्टानामित्यपि वदन्ति कथं तर्हि "व्यातेने किरणावलीमुदयन" इति स्वक्रियायाः स्वप्रत्यक्षत्वादिति चेत् असङ्गतमेव व्यासङ्गादिना स्वव्यापारस्य परोक्षत्वोपपादनेऽपिअनद्यतनातीतत्वयोरभावेन तदर्थकलिड्सम्भवात् ।

लुङर्थमाह श्वोभाविनीति अनद्यतने भाविनीत्यर्थः "अनद्यतने लुडिति,, सूत्रात् यथा श्वोभवितेत्यादौ ।

लृङर्थमाह भविष्यतीति भविष्यत्सामान्ये इत्यर्थः "लृट् शेषे च इति सूत्रात् यथा घटोभविष्यतीत्यादौ तत्त्वश्च * वर्त्तमानप्रागभावप्रतियोगिसमयोत्पत्तिमत्त्वम् ।

---

* नन्वहमेकःप्रथममासं वर्त्तामिभविष्यामि चेत्यत्रधात्वर्थ सत्तायां वर्त्तमानप्रागभावप्रतियोगित्वस्य भविष्यत्त्वस्य वाधात्तदर्थकाद्भविष्यदर्थकप्रत्ययाऽप्रसक्तिरत आह । तत्त्वश्चेति । वर्त्तमानप्रागभावप्रतियोग्युत्पत्तिकसमयवत्त्वमिति पाठः । तथा च तदर्थव्यापाराऽधिकरणस्य कालस्याऽनित्य राजक्रियाऽऽद्यात्मकस्योक्तभविष्यत्त्वात्तदादायैव लृडुपपत्तिरिति यथाश्रुतार्थाऽनुसारिणः । अन्ये तु ननु येषां मते नश्यत्यादिधातूनां नाशमात्रमर्थस्तेषां भविष्यत्वस्य वर्त्तमानप्रागभावप्रतियोगित्वसत्वे श्वोभाविनाशके परश्वो नङ्क्ष्यतीति प्रयोगाऽऽपत्तिः वर्त्तमाननाशप्रागभावप्रतियोगिनि तन्नाशे परश्वस्तनकालवृत्तित्वसत्त्वात् । नच परश्वस्तनकालस्यभविष्यत्त्वघटकप्रागभावेऽन्वयाऽभ्युपगमात्तस्य च तत्प्रागभावे बाधान्नोक्तप्रयोगाऽऽपत्तिरिति वाच्यम् । तथा सति श्वोभा-

